KAVYASANGRAHA SERIES



NO. I.

# KUMARASAMBHAVA SANGRAHA



EDITED WITH NOTES

BY

Mahopādhyāya

PANDIT V. VENKATARAMA SHARMA.

Vidyābhūshaṇa.

TRIVANDRUM

1939

॥ श्रीः ॥

महामहिमशालिनां सचिवोत्तमादिबिरुदभूषितानां
सर्. सी. पि. रामस्वाम्यार्याणां षष्ट्यब्दपूर्त्ति-
महोत्सवमनुस्मृत्य समन्वतार्यमाणायाः
काव्यसङ्ग्रहग्रन्थावल्या अयमङ्कः
प्रथमः कुमारसम्भवकाव्यसङ्ग्रहः
तेषामेव महनीये सन्निधौ
साभ्यनुज्ञं सबहुमानं
समर्प्यते ।

---

गुणोल्लासी रसस्यन्दिसुभाषितविभूषितः ।
आर्थी सहृदयश्लाघ्यां विविधां रीतिमाश्रितः ॥ १ ॥

उत्कर्षहेतुभिस्तैस्तैरलङ्कारैरलङ्कृतः ।
बहुप्रकारवेद्यार्थविज्ञाने सुप्रतिष्ठितः ॥ २ ॥

रम्यैः सङ्घटनाधर्मैरुपेतो लोकरञ्जकः ।
औचित्यं पुष्कलं पुष्णन् सद्भिर्वृत्तैर्मनोहरः ॥ ३ ॥

भावनोपचितः सोऽयं षष्टिपूर्त्या समुज्ज्वलः ।
रामस्वामीव काव्यानां सङ्ग्रहो जयताच्चिरम् ॥ ४ ॥

वे. वेङ्कटरामशर्मा विद्याभूषणः.

14989

# प्रस्तावना.

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥"

(बाणः)

काव्यं हि नाम रमणीयार्थप्रतिपादकैः शब्दैः सहृदयप्रीतिमुपजनयति । सुकुमारमतीनामपि यथा धर्मादिचतुर्वर्गफलप्राप्तिः स्यात्तथा काव्यानि प्रवृत्तानि । कुमारसम्भवं च पञ्चसु प्रसिद्धेषु संस्कृतमहाकाव्येष्वन्यतमम् ।

कुमारसम्भवप्रणेता महाकविः कालिदासः कस्त्वः. कदा बभूव, कयोः पुत्र आसीत्, कुत्र विद्यामभ्यस्तवान्, इत्यादिकं त्वनवगतम् । परन्तु तस्योज्जयिन्यां तत्समीपप्रदेशेषु अवन्त्यां चातीव परिचय आसीदिति तत्कृतकाव्येभ्यो विज्ञायते; महाकालवर्णनाच्च स मालवदेशीयो भवितुमर्हति ; स च जात्या ब्राह्मणः शैवश्चाभूत् ; तत्पत्न्याः कमलेति नामधेयम् ; इत्यादिकं तु केषाञ्चिदभ्यूहमात्रम् । कालिदासः प्राप्तमहाकवियशाः विक्रमादित्यसभामभूषयदिति किंवदन्ती प्रचरति । तत्र चेदमुपोद्बलकं वाक्यम् —

"धन्वन्तरिक्षपणकामरसिंहशङ्कु-
वेतालभट्टघटकर्परकालिदासाः ।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य" ॥

इति । क्रिस्तोः पूर्वं प्रथमशतकस्य क्रिस्तुजननादन-न्तरं पञ्चमशतकस्य प्रान्तकाले कालिदासस्य समय इति बहूनां पण्डितानामभिप्रायः ।

कालिदासेन मालविकाग्निमित्र-विक्रमोर्वशीया-भिज्ञान-शाकुन्तलानि त्रीणि नाटकानि कुमारसम्भव-रघुवंशे द्वे महा-काव्ये मेघदूत ऋतुसंहारनामनी द्वे खण्डकाव्ये च विरचितानि दृश्यन्ते । तस्य कृतयः वैदर्भीं रीतिमाश्रित्य शृङ्गाररसाङ्गि-तया प्रणीताः । वाल्मीकि-व्यास-भासवर्जम् उपमाचातुर्ये स्वभा-वोक्तौ पदसङ्घटनायां कल्पनासौन्दर्ये च न कोऽप्यन्यः कविरस्य तौल्यमर्हति । परिमितैः पदैः प्रभूतमर्थं सारस्येन प्रतिपाद-यितुं महाकवेरस्य सामर्थ्यमनन्यादृशमेव । यथा—

२८. तमे पद्ये 'वाचस्पति'पदेन, मनोगतमाशयं समी-चीनया वाचा प्रकाशयितुं स एव जानाति नेन्द्रः इति सूच-यति ।

२९. तमे पद्ये 'आमृष्टं नः परैः पदम्' इत्यनेन शत्रु-भिर्देवा नष्टप्रभावा अभवन्, मदीयमपि पदं दैत्याचार्येणाक्रान्तम इति निवेदयन् बृहस्पतिः 'प्रत्येकं विनियुक्तात्मा', 'त्वया दत्त-वरोदीर्णः' इत्यादिना अधर्मप्रकृतिकानपि प्रोत्साहयता सदस-द्विवेकविधुरेण परमेष्ठिना न साध्वनुष्ठितमिति बोधयतीव ।

११. तमे पद्ये 'शरीरार्धहराम्'इत्यनेन "अर्धो वा ए

१३. तमे पद्ये 'अयाचितारम्' इत्यनेन वरप्रार्थनामन्तरा कन्याप्रदानं न युक्तम्, इति सूचितम् । तच्च 'तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः' एवमुपरिष्टात्स्फुटीभविष्यति ।

१७. तमे पद्ये 'तनूजामाराधनायास्य समादिदेश' इत्यनेन शुश्रूषया सहवसतिव्याजेनान्योन्यानुरागसंवर्द्धकं मनीषितमर्थं घटयितुमद्रिराजः प्रयतितवानिति सूचितम् ।

कुमारस्य कार्तिकेयस्य सम्भवमुत्पत्तिं कार्यतयावलम्ब्य प्रवृत्तमिदं काव्यं कुमारसम्भवम् । प्रधानेन हि व्यपदेशा भवन्ति इति हि न्यायः । पुराणेषु इतिहासेषु च कार्तिकेयस्य युद्धदेवतात्वमुपवर्णितम् । शिवकुमारश्चायं कुमारः अग्निभूः, गुहः, स्कन्दः, शरवणभवः, शरजन्मा, क्रौञ्चदारणः, सेनानीः, षाण्मातुरः, महासेनः, विशाखः, तारकजिद् इत्यादिभिर्बहुभिर्नामभिः कीर्त्यते । एकैकस्यापि नाम्नः कारणभूतं कार्यजातमपि तत्र तत्र पुराणादिषु निरूपितं दृश्यते ।

स्कन्दमधिकृत्याधुनातनाः केचन गवेषणपटवः युक्त्यनुरूपया रीत्या एवं प्रतिपादयन्ति—

क्रिस्तोः प्रागत्र भारतवर्षं जेतुमागतस्य महतोऽलक्षान्दस्य यवनाधिपतेरपदानानि दृष्ट्वातीव विस्मिता एतद्देशीयास्तमीश्वरांशतया सङ्कल्प्य पौराणिकैरैतिहासिकैश्च वचनैर्वि-

विधैरुपाख्यानैश्चोपश्लोकयितुमारब्धाः । क्रमेण च सः शिव-
विष्णवादिवत्समेषामपि आराध्यमूर्तिः परिणनाम * इति ।

शिवपुराणे पञ्चमाध्यायमारभ्य चतुर्दशतमाध्यायपर्यन्त-
मियमेव कुमारसम्भवकथा सविस्तरं प्रतिपाद्यते। वर्णनारीतिसा-
म्यादर्थसारूप्यात् शब्दसादृश्याच्च शिवपुराणमेव कालिदासस्य
कुमारसम्भवविरचने आधारभूतो ग्रन्थ इति निश्चीयते । शिव-
पुराणप्रतिपादितमेवार्थजातं कालिदासः सचमत्कारं कविनिबद्ध-
वक्तृप्रौढोक्त्या प्रतिभोल्लेखेन च वर्णयति ।

कालिदासीये कुमारसम्भवे आदितः सप्तमसर्गपर्यन्तं
वर्ण्यमानेभ्यो भागेभ्यः, प्रतिपाद्यमाहात्म्यं कवितासौभाग्यं
चाविहाय क्वचिदधिकान् वर्णनाभागान् त्यक्त्वा च सङ्कलितोऽयं
काव्यसङ्ग्रहग्रन्थावल्या अङ्कः प्रथमः कुमारसम्भवकाव्यस-
ङ्ग्रहः, मन्ये विद्यार्थिनामुपयोगाय कल्पेतेति ।

इति

अनन्तशयनम् .
२४-४-१११५.

सहृदयविधेयः,
वे. वेङ्कटरामशर्मा विद्याभूषणः.

* Vide "*Skanda : The Alexander Romance in India,*" a paper by N. Gopala Pillai M. A; in the "*Proceedings and Transactions of the Ninth All India Oriental*

# कुमारसम्भवसङ्ग्रहः ।



अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः ।
पूर्वापरौ वारिनिधी वगाह्य स्थितः पृथिव्या इव मानदण्डः ॥१॥
स मानसीं मेरुसखः पितॄणां कन्यां कुलस्य स्थितये स्थितिज्ञः ।
मेनां मुनीनामपि माननीयामात्मानुरूपां विधिनोपयेमे ॥२॥
असूत सा नागवधूपभोग्यं मैनाकमम्भोनिधिबद्धसख्यम् ।
क्रुद्धेऽपि पक्षच्छिदि वृत्रशत्राववेदनाज्ञं कुलिशक्षतानाम् ॥३॥
अथावमानेन पितुः प्रयुक्ता दक्षस्य कन्या भवपूर्वपत्नी ।
सती सती योगविसृष्टदेहा तां जन्मने शैलवधूं प्रपेदे ॥४॥
दिने दिने सा परिवर्धमाना लब्धोदया चान्द्रमसीव लेखा ।
पुपोष लावण्यमयान् विशेषान् ज्योत्स्नान्तराणीव कलान्तराणि॥
तां पार्वतीत्याभिजनेन नाम्ना बन्धुप्रियां बन्धुजनो जुहाव ।
उ मेति मात्रा तपसो निषिद्धा पश्चादुमाख्यां सुमुखी जगाम ॥६॥
मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च ।
रेमे मुहुर्मध्यगता सखीनां क्रीडारसं निर्विशतीव बाल्ये ॥७॥

तां हंसमालाः शरदीव गङ्गां महौषधिं नक्तमिवात्मभासः ।
स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः ॥८॥

असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥९॥

उन्मीलितं तूलिकयेव चित्रं सूर्यांशुभिर्भिन्नमिवारविन्दम् ।
बभूव तस्याश्चतुरस्रशोभि वपुर्विभक्तं नवयौवनेन ॥१०॥

तां नारदः कामचरः कदाचिद् कन्यां किल प्रेक्ष्य पितुः समीपे ।
समादिदेशैकवधूं भवित्रीं प्रेम्णा शरीरार्धहरां हरस्य ॥११॥

गुरुः प्रगल्भेऽपि वयस्यतोऽस्यास्तस्थौ निवृत्तान्यवराभिलाषः ।
ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ॥१२॥

अयाचितारं न हि देवदेवमद्रिः सुतां ग्राहयितुं शशाक ।
अभ्यर्थनाभङ्गभयेन साधुर्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥१३॥

यदैव पूर्वे जनने शरीरं सा दक्षरोषात् सुदती ससर्ज ।
तदाप्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत् ॥१४॥

स कृत्तिवासास्तपसे यतात्मा गङ्गाप्रवाहोक्षितदेवदारु ।
प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित्क्वणत्किन्नरमध्युवास ॥१५॥

तत्राग्निमाधाय समित्समिद्धं स्वमेव मूर्त्यन्तरमष्टमूर्तिः ।
कामेन तपश्चचार ॥१६॥

अनर्घ्यमर्घ्येण तमद्रिनाथः स्वर्गौकसामर्चितमर्चयित्वा ।
आराधनायास्य सखीसमेतां समादिदेश प्रयतां तनूजाम् ॥१७॥

अवचितबलिपुष्पा वेदिसम्मार्गदक्षा
.नियमविधिजलानां बर्हिषां चोपनेत्री ।
गिरिशमुपचचार प्रत्यहं सा सुकेशी
नियमितपरिखेदा तच्छिरश्चन्द्रपादैः ॥१८॥

---

तस्मिन्विप्रकृताः काले तारकेण दिवौकसः ।
तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः ॥१९॥
तेषामाविरभूद् ब्रह्मा परिम्लानमुखश्रियाम् ।
सरसां सुप्तपद्मानां प्रातर्दीधितिमानिव ॥२०॥
अथ सर्वस्य धातारं ते सर्वे सर्वतोमुखम् ।
वागीशं वाग्भिरर्थ्याभिः प्रणिपत्योपतस्थिरे ॥२१॥
[स तु] तेभ्यः स्तुतीः श्रुत्वा यथार्था हृदयङ्गमाः ।
प्रसादाभिमुखो वेधाः प्रत्युवाच दिवौकसः ॥२२॥
स्वागतं स्वानधीकारान् प्रभावैरवलम्ब्य वः ।
युगपद्युगबाहुभ्यः प्राप्तेभ्यः प्राज्यविक्रमाः ॥२३॥
किमिदं द्युतिमात्मीयां न बिभ्रति यथा पुरा ।
हिमक्लिष्टप्रकाशानि ज्योतींषीव मुखानि वः ॥२४॥

लब्धप्रतिष्ठाः प्रथमं यूयं किं बलवत्तरैः ।
अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ॥२५॥

तद् ब्रूत वत्साः किमितः प्रार्थयध्वं समागताः ।
मयि सृष्टिर्हि लोकानां रक्षा युष्मास्ववस्थिता ॥२६॥

ततो मन्दानिलोद्धूतकमलाकरशोभिना ।
गुरुं नेत्रसहस्रेण नोदयामास वासवः ॥ २७ ॥

स द्विनेत्रं हरेश्चक्षुः सहस्रनयनाधिकम् ।
वाचस्पतिरुवाचेदं प्राञ्जलिर्जलजासनम् ॥ २८ ॥

एवं यदात्थ भगवन्नामृष्टं नः परैः पदम् ।
प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो ॥ २९ ॥

भवल्लब्धवरोदीर्णस्तारकाख्यो महासुरः ।
उपप्लवाय लोकानां धूमकेतुरिवोत्थितः ॥ ३० ॥

तस्मिन्नुपायाः सर्वे नः क्रूरे प्रतिहतक्रियाः ।
वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ॥ ३१ ॥

जयाशा यत्र चास्माकं प्रतिघातोत्थितार्चिषा ।
हरिचक्रेण तेनास्य कण्ठे निष्कमिवार्पितम् ॥ ३२ ॥

तदिच्छामो विभो स्रष्टुं सेनान्यं तस्य शान्तये ।
कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ॥ ३३ ॥

गोप्तारं सुरसैन्यानां यं पुरस्कृत्य गोत्रभित् ।
प्रत्यानेष्यति शत्रुभ्यो वन्दीमिव जयश्रियम् ॥ ३४ ॥

वचस्यवसिते तस्मिन् ससर्ज गिरमात्मभूः ।
गर्जितानन्तरां वृष्टिं सौभाग्येन जिगाय सा ॥ ३५ ॥

सम्पत्स्यते वः कामोऽयं कालः कश्चित् प्रतीक्ष्यताम् ।
न त्वस्य सिद्धौ यास्यामि सर्गव्यापारमात्मना ॥ ३६ ॥

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम् ।
विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ॥ ३७ ॥

वृतं तेनेदमेव प्राङ् मया चास्मै प्रतिश्रुतम् ।
वरेण शमितं लोकानलं दग्धुं हि तत्तपः ॥ ३८ ॥

संयुगे सांयुगीनं तमुद्यन्तं प्रसहेत कः ।
अंशादृते निषिक्तस्य नीललोहितरेतसः ॥ ३९ ॥

स हि देवः परं ज्योतिस्तमःपारे व्यवस्थितम् ।
परिच्छिन्नप्रभावर्द्धिर्न मया न च विष्णुना ॥ ४० ॥

उमारूपेण ते यूयं संयमस्तिमितं मनः ।
शम्भोर्यतध्वमाक्रष्टुमयस्कान्तेन लोहवत् ॥४१॥

उभे एव क्षमे वोढुमुभयोर्बीजमाहितम् ।
सा वा शम्भोस्तदीया वा मूर्त्तिर्जलमयी मम ॥ ४२ ॥

तस्यात्मा शितिकण्ठस्य सैनापत्यमुपेत्य वः ।
मोक्ष्यते सुरबन्दीनां वेणीर्वीर्यविभूतिभिः ॥ ४३ ॥

इति व्याहृत्य विबुधान् विश्वयोनिस्तिरोदधे ।
मनस्याहितकर्तव्यास्तेपि देवा दिवं ययुः ॥ ४४ ॥

तत्र निश्चित्य कन्दर्पमगमत्पाकशासनः ।
मनसा कार्यसंसिद्धौ त्वराद्विगुणरंहसा ॥ ४५ ॥

अथ स ललितयोषिद्भ्रूलताचारुशृङ्गं
रतिवलयपदाङ्के चापमासज्य कण्ठे ।
सहचरमधुहस्तन्यस्तचूताङ्कुरास्त्रः
शतमखमुपतस्थे प्राञ्जलिः पुष्पधन्वा ॥ ४६ ॥

---

स वासवेनासनसन्निकृष्टमितो निषीदेति विसृष्टभूमिः ।
भर्तुः प्रसादं प्रतिनन्द्य मूर्ध्ना वक्तुं मिथः प्राक्रमतैवमेनम् ॥ ४[७ ॥]

आज्ञापय ज्ञातविशेष पुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितमाज्ञया ते ॥ ४८ ॥

तव प्रसादात् कुसुमायुधोऽपि सहायमेकं मधुमेव लब्ध्वा ।
कुर्यां हरस्यापि पिनाकपाणेर्धैर्यच्युतिं के मम धन्विनोऽन्ये ॥ ४[९ ॥]

अथोरुदेशादवतार्य पादमाक्रान्तिसम्भावितपादपीठम् ।

वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
ज्रं तपोवीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकं च ॥ ५१ ॥

ाशंसता बाणगतिं वृषाङ्के कार्यं त्वया नः प्रतिपन्नकल्पम् ।
बोध यज्ञांशभुजामिदानीमुच्चैर्द्विषामीप्सितमेतदेव ॥ ५२ ॥

मी हि वीर्यप्रभवं भवस्य जयाय सेनान्यमुशन्ति देवाः ।
च त्वदेकेषुनिपातसाध्यो ब्रह्माङ्गभूर्ब्रह्मणि योजितात्मा ॥५३॥

स्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।
षित्सु तद्वीर्यनिषेकभूमिः सैव क्षमेत्यात्मभुवोपदिष्टम् ॥५४॥

रोर्नियोगाच्च नगेन्द्रकन्या स्थाणुं तपस्यन्तमधित्यकायाम् ।
न्वास्त इत्यप्सरसां मुखेभ्यः श्रुतं मया मत्प्रणिधिः स वर्गः ॥

द् गच्छ सिध्यै कुरु देवकार्यमर्थोऽयमर्थान्तरभाव्य एव ।
पेक्षते प्रत्ययमुत्तमं त्वां बीजाङ्कुरः प्रागुदयादिवाम्भः ॥५६॥

ाति शेषामिव भर्तुराज्ञामादाय मूर्ध्ना मदनः प्रतस्थे ।
ावतास्फालनकर्कशेन हस्तेन पस्पर्श तदङ्गमिन्द्रः ॥५७॥

माधवेनाभिमतेन सख्या रत्या च साशङ्कमनुप्रयातः ।
ङ्गव्ययप्रार्थितकार्यसिद्धिः स्थाण्वाश्रमं हैमवतं जगाम ॥५८॥

देवदारुद्रुमवेदिकायां शार्दूलचर्मव्यवधानवत्याम् ।
ासीनमासन्नशरीरपातस्त्रियम्बकं संयमिनं ददर्श ॥५९॥

स्मरस्तथाभूतमयुग्मनेत्रं पश्यन्नदूरान्मनसाप्यधृष्यम् ।
नालक्षयत्साध्वससन्नहस्तः स्रस्तं शरं चापमपि स्वहस्तात् ॥६०

निर्वाणभूयिष्ठमथास्य वीर्यं सन्धुक्षयन्तीव वपुर्गुणेन ।
अनुप्रयाता वनदेवताभ्यामदृश्यत स्थावरराजकन्या ॥६१॥

तां वीक्ष्य सर्वावयवानवद्यां रतेरपि ह्रीपदमादधानाम् ।
जितेन्द्रिये शूलिनि पुष्पचापः स्वकार्यसिद्धिं पुनराशशंसे ॥६२

उमापि नीलालकमध्यशोभि विस्रंसयन्ती नवकर्णिकारम् ।
चकार कर्णच्युतपल्लवेन मूर्ध्ना प्रणामं वृषभध्वजाय ॥६३॥

अनन्यभाजं पतिमाप्नुहीति सा तथ्यमेवाभिहिता भवेन ।
न हीश्वरव्याहृतयः कदाचित् पुष्णन्ति लोके विपरीतमर्थम् ॥६

कामस्तु बाणावसरं प्रतीक्ष्य पतङ्गवद्वह्निमुखं विविक्षुः ।
उमासमक्षं हरबद्धलक्ष्यः शरासनज्यां मुहुराममर्श ॥६५॥

अथोपनिन्ये गिरिशाय गौरी तपस्विने ताम्ररुचा करेण ।
विशोषितां भानुमतो मयूखैर्मन्दाकिनीपुष्करबीजमालाम् ॥६

प्रतिग्रहीतुं प्रणयिप्रियत्वात् त्रिलोचनस्तामुपचक्रमे च ।
सम्मोहनं नाम च पुष्पधन्वा धनुष्यमोघं समधत्त बाणम्॥

हरस्तु किञ्चित्परिलुप्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
... ॥

विवृण्वती शैलसुतापि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः ।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ॥६९॥

अथेन्द्रियक्षोभमयुग्मनेत्रः पुनर्वशित्वाद् बलवन्निगृह्य ।
हेतुं स्वचेतोविकृतेर्दिदृक्षुर्दिशामुपान्तेषु ससर्ज दृष्टिम् ॥७०॥

सदक्षिणापाङ्गनिविष्टमुष्टिं नतांसमाकुञ्चितसव्यपादम् ।
ददर्श चक्रीकृतचारुचापं प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥७१॥

तपःपरामर्शविवृद्धमन्योर्भ्रूभङ्गदुष्प्रेक्ष्यमुखस्य तस्य ।
स्फुरन्नुदर्चिः सहसा तृतीयादक्ष्णः कृशानुः किल निष्पपात ॥

क्रोधं प्रभो संहर संहरेति यावद् गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥७३॥

तमाशु विघ्नं तपसस्तपस्वी वनस्पतिं वज्र इवावभज्य ।
स्त्रीसन्निकर्षं परिहर्तुमिच्छन्नन्तर्दधे भूतपतिः सभूतः ॥७४॥

शैलात्मजापि पितुरुच्छिरसोऽभिलाषं
व्यर्थं समर्थ्य ललितं वपुरात्मनश्च ।
सख्योः समक्षमिति चाधिकजातलज्जा
शून्या जगाम भवनाभिमुखी कथञ्चित् ॥७५॥

---

अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता ।
विधिना प्रतिपादयिष्यता नववैधव्यमसह्यवेदनम् ॥७६॥

अयि जीवितनाथ! जीवसीत्यभिधायोत्थितया तया पुरः ।
ददृशे पुरुषाकृति क्षितौ हरकोपानलभस्म केवलम् ॥७७॥

अथ सा पुनरेव विह्वला वसुधालिङ्गनधूसरस्तनी ।
विललाप विकीर्णमूर्धजा समदुःखामिव कुर्वती स्थलीम् ॥७८॥

अथ तैः परिदेविताक्षरैर्हृदये दिग्धशरैरिवाहतः ।
रतिमभ्युपपत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥७९॥

इति चैनमुवाच दुःखिता सुहृदः पश्य वसन्त किं स्थितम् ।
तदिदं कणशो विकीर्यते पवनैर्भस्म कपोतकर्बुरम् ॥८०॥

तदिदं क्रियतामनन्तरं भवता बन्धुजनप्रयोजनम् ।
विधुरां ज्वलनातिसर्जनान्ननु मां प्रापय पत्युरन्तिकम् ॥८१॥

शशिना सह याति कौमुदी सह मेघेन तडित्प्रलीयते ।
प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ॥८२॥

इति देहविमुक्तये स्थितां रतिमाकाशभवा सरस्वती ।
शफरीं ह्रदशोषविक्लवां प्रथमा वृष्टिरिवान्वकम्पयत् ॥८३॥

कुसुमायुधपत्नि दुर्लभस्तव भर्ता न चिराद्भविष्यति ।
शृणु येन स कर्मणा गतः शलभत्वं हरलोचनार्चिषि ॥८४॥

अभिलाषमुदीरितेन्द्रियः स्वसुतायामकरोत्प्रजापतिः ।
॥८५॥

रिणेष्यति पार्वतीं यदा तपसा तत्प्रवणीकृतो हरः ।
पलब्धसुखस्तदा स्मरं वपुषा स्वेन नियोजयिष्यति ॥८६॥

ति चाह स धर्मयाचितः स्मरशापावधिदां सरस्वतीम् ।
शनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ॥८७॥

दिदं परिरक्ष शोभने भवितव्यप्रियसङ्गमं वपुः ।
विर्पीतजला तपात्यये पुनरोघेन हि युज्यते नदी ॥८८॥

थ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयाम्बभूव ।
शिन इव दिवाननस्य लेखा किरणपरिक्षयधूसरा प्रदोषम्॥८९॥

---

था समक्षं दहता मनोभवं पिनाकिना भग्नमनोरथा सती ।
निनिन्द रूपं हृदयेन पार्वती प्रियेषु सौभाग्यफला हि चारुता॥

येष सा कर्तुमवन्ध्यरूपतां समाधिमास्थाय तपोभिरात्मनः ।
अवाप्यते वा कथमन्यथा द्वयं तथाविधं प्रेम पतिश्च तादृशः॥९१॥

कदाचिदासन्नसखीमुखेन सा मनोरथज्ञं पितरं मनस्विनी ।
याचतारण्यनिवासमात्मनः फलोदयान्ताय तपःसमाधये ॥

अथानुरूपाभिनिवेशतोषिणा कृताभ्यनुज्ञा गुरुणा गरीयसा ।
जासु पश्चात्प्रथितं तदाख्यया जगाम गौरीशिखरं शिखण्डिमत्

कृताभिषेकां हुतजातवेदसं त्वगुत्तरासङ्गवतीमधीतिनीम् ।
दिदृक्षवस्तामृषयोऽभ्युपागमन्न धर्मवृद्धेषु वयः समीक्ष्यते ॥९४॥

यदा फलं पूर्वतपस्समाधिना न तावता लभ्यममंस्त कांक्षितम् ।
तदानपेक्ष्य स्वशरीरमार्दवं तपो महत्सा चरितुं प्रचक्रमे ॥९५॥

अथाजिनाषाढधरः प्रगल्भवाग्ज्वलन्निव ब्रह्ममयेन तेजसा ।
विवेश कश्चिज्जटिलस्तपोवनं शरीरबद्धः प्रथमाश्रमो यथा ॥९६॥

तमातिथेयी बहुमानपूर्वया सपर्यया प्रत्युदियाय पार्वती ।
भवन्ति साम्येपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः ॥

विधिप्रयुक्तां परिगृह्य सत्क्रियां परिश्रमं नाम विनीय च क्षणम् ।
उमां स पश्यन्नृजुनैव चक्षुषा प्रचक्रमे वक्तुमनुज्झितक्रमः ॥

अपि क्रियार्थं सुलभं समित्कुशं जलान्यपि स्नानविधिक्षमाणि ते ।
अपि स्वशक्त्या तपसि प्रवर्तसे शरीरमाद्यं खलु धर्मसाधनम् ॥

यदुच्यते पार्वति पापवृत्तये न रूपमित्यव्यभिचारि तद्वचः ।
तथाहि ते शीलमुदारदर्शने तपस्विनामप्युपदेशतां गतम् ॥१००॥

अतोऽत्र किञ्चिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥

कुले प्रसूतिः प्रथमस्य वेधसस्त्रिलोकसौन्दर्यमिवोदितं वपुः ।
अमृग्यमैश्वर्यसुखं नवं वयस्तपःफलं स्यात्किमतः परं वद ॥१०२

दिवं यदि प्रार्थयसे वृथा श्रमः पितुः प्रदेशास्तव देवभूमयः ।

निवेदितं निःश्वसितेन सोष्मणा मनस्तु मे संशयमेव गाहते ।
न दृश्यते प्रार्थयितव्य एव ते भविष्यति प्रार्थितदुर्लभः कथम् ॥

कियच्चिरं श्राम्यसि गौरि विद्यते ममापि पूर्वाश्रमसञ्चितं तपः ।
तदर्धभागेन लभस्व कांक्षितं वरं तमिच्छामि च साधु वेदितुम् ॥

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥१०६॥

सखी तदीया तमुवाच वर्णिनं निबोध साधो तव चेत्कुतूहलम् ।
यदर्थमम्भोजमिवोष्णवारणं कृतं तपःसाधनमेतया वपुः ॥१०७॥

इयं महेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी ।
अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति ।

यदा च तस्याधिगमे जगत्पतेरपश्यदन्यं न विधिं विचिन्वती ।
तदा सहास्माभिरनुज्ञया गुरोरियं प्रपन्ना तपसे तपोवनम् ॥१०९॥

अगूढसद्भावमितीङ्गितज्ञया निवेदितो नैष्ठिकसुन्दरस्तया ।
अयीदमेवं परिहास इत्युमामपृच्छदव्यञ्जितहर्षलक्षणः ॥११०॥

अथाग्रहस्ते मुकुलीकृताङ्गुलौ समर्पयन्ती स्फटिकाक्षमालिकाम् ।
कथञ्चिदद्रेस्तनया मिताक्षरं चिरव्यवस्थापितवागभाषत ॥१११॥

यथा श्रुतं वेदविदां वर त्वया जनोऽयमुच्चैःपदलङ्घनोत्सुकः ।
तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते ॥११२॥

अथाह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुनरेव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तं तवानुवृत्तिं न च कर्तुमुत्सहे
निवर्तयास्मादसदीप्सितान्मनः क्व तद्विधस्त्वं क्व च पुण्यलक्षणा
अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ।
इति द्विजातौ प्रतिकूलवादिनि प्रवेपमानाधरलक्ष्यकोपया ।
विकुञ्चितभ्रूलतमाहिते तया विलोचने तिर्यगुपान्तलोहिते ॥
उवाच चैनं परमार्थतो हरं न वेत्सि नूनं यत एवमात्थ माम्
अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम्
अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः ।
ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते ॥
निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्
इतो गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला
स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः

तं वीक्ष्य वेपथुमती सरसाङ्गयष्टि-
र्निक्षेपणाय पदमुद्धृतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
[illegible] न ययौ न तस्थौ ॥ १२० ॥

अद्य प्रभृत्यवनताङ्गि तवास्मि दासः
क्रीतस्तपोभिरिति वादिनि चन्द्रमौलौ ।
अह्नाय सा नियमजं क्लमसुत्ससर्ज
क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ १२१ ॥

---

अथ विश्वात्मने गौरी सन्दिदेश मिथः सखीम् ।
दाता मे भूभृतां नाथः प्रमाणीक्रियतामिति ॥१२२॥

स तथेति प्रतिज्ञाय विसृज्य कथमप्युमाम् ।
ऋषीन्ज्योतिर्मयान् सप्त सस्मार स्मरशासनः ॥१२३॥

ते प्रभामण्डलैर्व्योम द्योतयन्तस्तपोधनाः ।
सारुन्धतीकाः सपदि प्रादुरासन् पुरः प्रभोः ॥१२४॥

तेषां मध्यगता साध्वी पत्युः पादार्पितेक्षणा ।
साक्षादिव तपःसिद्धिर्बभासे बह्वरुन्धती ।।१२५॥

तामगौरवभेदेन मुनींश्चापश्यदीश्वरः ।
स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥१२६॥

तद्दर्शनादभूच्छम्भोर्भूयान् दारार्थमादरः ।
क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम्॥१२७॥

अथ ते मुनयः सर्वे मानयित्वा जगद्गुरुम् ।
इदमूचुरनूचानाः प्रीतिकण्टकितत्वचः ॥१२८॥

साक्षाद् दृष्टोऽसि न पुनर्विद्मस्त्वां वयमञ्जसा ।
प्रसीद कथयात्मानं न धियां पथि वर्तसे ॥१२९॥

अथवा सुमहत्येषा प्रार्थना देव तिष्ठतु ।
चिन्तितोपस्थितांस्तावच्छाधि नः करवाम किम् ॥१३०

अथ मौलिगतस्येन्दोर्विशदैर्दशनांशुभिः ।
उपचिन्वन् प्रभां तन्वीं प्रत्याह परमेश्वरः ॥१३१॥

विदितं वो यथा स्वार्था न मे काश्चित्प्रवृत्तयः ।
ननु मूर्तिभिरष्टाभिरित्थम्भूतोऽस्मि सूचितः ॥१३२॥

सोऽहं तृष्णातुरैर्वृष्टिं विद्युत्वानिव चातकैः ।
अरिविप्रकृतैर्देवैः प्रसूतिं प्रति याचितः ॥१३३॥

अत आहर्तुमिच्छामि पार्वतीमात्मजन्मने ।
उत्पत्तये हविर्भोक्तुर्यजमान इवारणिम् ॥१३४॥

तामस्मदर्थे युष्माभिर्याचितव्यो हिमालयः ।
विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ॥१३५

तत्प्रयातौषधिप्रस्थं सिद्धये हिमवत्पुरम् ।
महाकोशीप्रपातेऽस्मिन् सङ्गमः पुनरेव नः ॥१३६॥

ते चाकाशमसिश्यामम्रुत्पत्य परमर्षयः ।

ते सद्मनि गिरेर्वेगादुन्मुखद्वाःस्थवीक्षिताः ।
अवतेरुर्जटाभारैर्लिखितानलनिश्चलैः ॥१३८॥

तानर्घ्यानर्घ्यमादाय दूरात् प्रत्युद्ययौ गिरिः ।
नमयन् सारगुरुभिः पादन्यासैर्वसुन्धराम् ॥१३९॥

तत्र वेत्रासनासीनान् कृतासनपरिग्रहः ।
इत्युवाचेश्वरान् वाचं प्राञ्जलिर्भूधरेश्वरः ॥१४०॥

कर्तव्यं वो न पश्यामि स्याच्चेत्किं नोपपद्यते ।
मन्ये मत्पावनायैव प्रस्थानं भवतामिह ॥१४१॥

तथापि तावत्कस्मिंश्चिदाज्ञां मे दातुमर्हथ ।
विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥१४२॥

एते वयममी दाराः कन्येयं कुलजीवितम् ।
ब्रूत येनात्र वः कार्यमनास्था बाह्यवस्तुषु ॥१४३॥

अथाङ्गिरसमग्रण्यमुदाहरणवस्तुषु ।
ऋषयो नोदयामासुः प्रत्युवाच स भूधरम् ॥१४४॥

उपपन्नमिदं सर्वमतः परमपि त्वयि ।
मनसः शिखराणां च सदृशी ते समुन्नतिः ॥१४५॥

तदागमनकार्यं नः शृणु कार्यं तवैव तत् ।
श्रेयसामुपदेशात्तु वयमत्रांशभागिनः ॥१४६॥

अणिमादिगुणोपेतमस्पृष्टपुरुषान्तरम् ।
शब्दमीश्वर इत्युच्चैः सार्धचन्द्रं बिभर्ति यः ॥१४७॥

स ते दुहितरं साक्षात्साक्षी विश्वस्य कर्मणाम् ।
वृणुते वरदः शम्भुरस्मत्संक्रामितैः पदैः ॥१४८॥

तमर्थमिव भारत्या सुतया योक्तुमर्हसि ।
अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥१४९॥

उमा वधूर्भवान् दाता याचितार इमे वयम् ।
वरः शम्भुरलं ह्येष त्वत्कुलोद्भूतये विधिः ॥१५०॥

एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्वती ॥१५१॥

शैलः सम्पूर्णकामोऽपि मेनामुखमुदैक्षत ।
प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥१५२॥

मेने मेनापि तत्सर्वं पत्युः कार्यमभीप्सितम् ।
भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥१५३॥

इदमत्रोत्तरं न्याय्यमिति बुद्ध्या विमृश्य सः ।
आददे वचसामन्ते मङ्गलालंकृतां सुताम् ॥१५४॥

एहि विश्वात्मने वत्से! भिक्षासि परिकल्पिता ।

एतावदुक्त्वा तनयामृषीनाह महीधरः ।
इयं नमति वः सर्वांस्त्रिलोचनवधूरिति ॥१५६॥

ईप्सितार्थक्रियोदारं तेऽभिनन्द्य गिरेर्वचः ।
आशीर्भिरेधयामासुः पुरःपाकाभिरम्बिकाम् ॥१५७॥

तां प्रणामादरस्रस्तजाम्बूनदवतंसकाम् ।
अङ्कमारोपयामास लज्जमानामरुन्धती ॥१५८॥

वैवाहिकीं तिथिं पृष्टास्तत्क्षणं हरबन्धुना ।
ते त्र्यहादूर्ध्वमाख्याय चेरुश्चीरपरिग्रहाः ॥१५९॥

ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम् ।
सिद्धं चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः ॥१६०॥

---

ौषधीनामधिपस्य वृद्धौ तिथौ च जामित्रगुणान्वितायाम् ।
तबन्धुर्हिमवान्सुताया विवाहदीक्षाविधिमन्वतिष्ठत् ॥ १६१

मङ्गलस्नानविशुद्धगात्री गृहीतपत्युद्गमनीयवस्त्रा ।
त्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥ १६२ ॥

सम्भवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
द्विहङ्गैरिव लीयमानैरामुच्यमानाभरणा चकासे ॥ १६३ ॥

ालोक्य च शोभमानमादर्शबिम्बे स्तिमितायताक्षी ।
[illegible] स्त्रीणां प्रियालोकफलो हि वेषः ॥

गोपतिं नन्दिभुजावलम्बी शार्दूलचर्मान्तरितोरुपृष्ठम् ।
द्भक्तिसंक्षिप्तबृहत्प्रमाणमारुह्य कैलासमिव प्रतस्थे ॥ १६५ ॥

मृद्धिमद्बन्धुजनाधिरूढैर्वृन्दैर्गजानां गिरिचक्रवर्ती ।
त्युज्जगामागमनप्रतीतः प्रफुल्लवृक्षैः कटकैरिव स्वैः ॥ १६६

त्रेश्वरो विष्टरभाग्यथावत्सरत्नमर्घ्यं मधुमच्च गव्यम् ।
वे दुकूले च नगोपनीते प्रत्यग्रहीत्सर्वममन्त्रवर्जम् ॥ १६७

कूलवासाः स वधूसमीपं निन्ये विनीतैरवरोधदक्षैः ।
लासमीपं स्फुटफेनराजिर्नवैरुदन्वानिव चन्द्रपादैः ॥ १६८ ॥

या प्रवृद्धाननचन्द्रकान्त्या प्रफुल्लचक्षुःकुमुदः कुमार्या ।
प्रसन्नचेतःसलिलः शिवोऽभूत्संसृज्यमानः शरदेव लोकः ॥

तस्याः करं शैलगुरूपनीतं जग्राह ताम्राङ्गुलिमष्टमूर्तिः ।
उमातनौ गूढतनोः स्मरस्य तच्छङ्किनः पूर्वमिव प्ररोहम् ॥

देवास्तदन्ते हरमूढभार्यं किरीटबद्धाञ्जलयो निपत्य ।
शापावसाने प्रतिपन्नमूर्तेर्ययाचिरे पञ्चशरस्य सेवाम् ॥ १७१

तस्यानुमेने भगवान्विमन्युर्व्यापारमात्मन्यपि सायकानाम् ।
कालप्रयुक्ता खलु कार्यविद्भिर्विज्ञापना भर्तृषु सिद्धिमेति ॥

# टिप्पणी ।

कुमारस्य कार्त्तिकेयस्य सम्भव उत्पत्तिः, तमधिकृत्य कृतं काव्यं [कुम]ारसम्भवम् । अथवा कुमारस्य सम्भवः, स एवाभेदोपचारात्कुमार[स]म्भवम् ।

[प]० १. देवतात्मेति वक्ष्यमाणचेतनकृत्यघटनार्थम् । हिमानां तुषाराणा[म]ालयो हिमालयः । नाम प्रसिद्धौ । न गच्छन्तीति नगाः पर्वताः तेषामधिराजः श्रेष्ठः । वगाह्य प्रविश्य । मानं परिच्छेदः, तदर्थो दण्डः ।

२. मानसीं मनसो जाताम् । मेरोः सखा मेरुसखः । कुलस्य स्थितये, न तु कामाय । स्थितिं मर्यादां जानातीति स्थितिज्ञः । उपयेमे 'उपाद्यमः स्वकरणे' इत्यात्मनेपदम् ।

३. उपभोक्तुं योग्यमुपभोग्यं. नागवधूपभोग्यं, समुद्रमग्नस्य नागलोकसन्निकर्षादिति भावः । मेनकायां भवः मैनाकः तम् । पक्षान् छिनत्ति तस्मिन् पक्षच्छिदि । वेदनां जानातीति वेदनाज्ञः, स न भवतीत्यवेदनाज्ञस्तम् । सर्वपर्वतपक्षछेदेपि अयमछिन्नपक्ष इति मैनाकस्योत्कर्षः । अभ्रातृककन्यापरिणयनिषेधात्पार्वती भ्रातृमतीति सूचितमनेन पद्येन ।

४. सती पतिव्रता । सती नाम देवी दक्षसुता । अवमानेन स्वभर्त्रवज्ञया । जीवात्मनः परमात्मनि योजनं योगः, तेन विसृष्टो देहो यया सा ।

चन्द्रसम इयं चान्द्रमसी । ज्योत्स्नायामन्तरमन्तर्धानं येषां तानि ज्योत्स्नान्तराणि, ज्योत्स्नयान्तर्हितानीत्यर्थः । अन्याः कलाः कला[न्]तराणि ।

६. अभिजनादागतेन आभिजनेन, अभिजनाः पूर्वबान्धवाः । पर्वतस्या[प]त्यं स्त्री पार्वती । उ इति सम्बोधने, अथवा तपोवाचकमव्ययम् मा इति निषेधे । तपसः 'वारणार्थानामीप्सितः' इति पञ्चमी शोभनं मुखं यस्याः सा सुमुखी ।

निर्विशती भुञ्जाना । क्रियया निर्वृत्तैः कृत्रिमैः ।

नक्तं रात्रौ । महौषधिं तृणविशेषम् । आत्मभासः स्वदीप्तय इव स्थिराः वासनारूपेण पूर्वमेव वर्तमानाः उपदेशाः पूर्वजन्म यस्यास्ताम् ।

असम्भृतमयत्नसिद्धम् । आसव इत्याख्या यस्य तत्, न आसवाख्य मनासवाख्यम् । मदस्यान्तःकरणविभ्रमस्य । यौवनेन हि युवतय प्रसाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः ।

०. उन्मीलितं रञ्जनद्रव्येणोद्भासितम् । चतस्रः अस्रयः अथवा चत्व अस्राः यस्य तच्चतुरस्रम् अन्यूनानतिरिक्तं यथा तथा शोभत इति चतु रस्रशोभि । विभक्तमभिव्याञ्जितम् । भिन्नं विकसितम् ।

१. कामेन चरति कामचरः । कदाचिदित्यनेन नारदस्य यदृच्छयागम नमुक्तम् । किलेति वार्तायाम् । एकवधूमसपत्नीकां भार्याम् । भवित्र भाविनीम् । शरीरस्यार्धं हरतीति ताम्, अथवा हरस्यार्धम् अर्धहर शरीरे अर्धहरः यस्याः सा ताम् ।

१२. ऋते कृशानोः कृशानुं विना । 'अन्यारादितर' इत्यादिना पञ्चमी हूयत इति हव्यमाज्यादिकम् ।

१३. अभ्यर्थनाभङ्गः प्रत्याख्यानम् । साधुमानी । माध्यस्थ्यमप्रवृत्तिम् मध्यस्थस्य भावम् ।

१४. जनने जन्मनि । शोभना दन्ताः यस्याः सा सुदती । परिगृह्यत इति परिग्रहो भार्या, न विद्यते परिग्रहो यस्य सः अपरिग्रहः ।

१५. कृत्तिः वासः यस्य सः कृत्तिवासाः । मृगनाभिः कस्तूरी । प्रस्थ 'उपान्वध्याङ्वसः' इति कर्मत्वम् ।

१६. आधाय प्रतिष्ठाप्य । अष्टौ मूर्तयो यस्य सः । 'भूतार्कचन्द्रयज्वानो

७. अर्घं मूल्यमर्हतीत्यर्घ्यः. स न भवतीत्यनर्घ्यस्तम् । स्वर्ग ओकः स्थानं येषां तेषां स्वर्गौकसां देवानामर्चितं देवैः पूज्यमानामित्यर्थः । सखीभ्यां जयाविजयाभ्यां समेताम् ।

१८. वेदिरुपवेशनार्था । सम्मार्गः शोधनम् । बर्हिषां कुशानाम् । अहन्य-हाने प्रत्यहम् । शोभनाः केशाः यस्याः सा सुकेशी ।

१९. तस्मिन् काले पार्वतीशुश्रूषाकाले । तारकः वज्रणखपुत्रः कश्चिदसुरः । विप्रकृताः पीडिताः । दिवमोकः स्थानं येषां ते दिवौकसः देवाः । तुरं त्वरितं साहयत्यभिभवत्यरीनिति तुराषाट्, तं तुरासाहं देवेन्द्रम् । धाम सदनम् । स्वयम्भुवो ब्रह्मण इदं स्वायम्भुवं स्थानं ययुः, ब्रह्मलोकं जग्मुरित्यर्थः ।

११. सर्वतः मुखानि यस्य तं, चतुर्मुखम् । अर्थ्याभिरर्थादनपेताभिः । उपतस्थिरे 'उपाद्देवपूजा'इत्यादिनात्मनेपदम् । धातारं स्रष्टारम् ।

१२. अर्थमनतिक्रम्य वर्तन्ते, अथवा यथा अर्थः यासां ताः यथार्थाः । हृदयं गच्छन्तीति हृदयङ्गमाः ।

१३. युगपत्प्राप्तेभ्यः — युगपत्प्राप्त्या महत्कार्यमनुमीयत इति भावः । युगानीव बाहवो येषां तेभ्यः, दीर्घबाहुभ्य इत्यर्थः । प्राज्यं प्रभूतम् ।

१४. ज्योतींषि नक्षत्राणि । आत्मन इयमात्मीया, तामात्मीयां नैसर्गिकीम् ।

१५. अतिशयेन बलवान् बलवत्तरः, तः । परैः शत्रुभिः । अपोद्यन्ते एभिरित्यपवादाः तैः । कृतव्यावृत्तयः कृतप्रतिष्ठाभङ्गाः ।

१७. गुरुं बृहस्पतिम् । नोदयामास प्रेरयामास ।

१८. द्वे नेत्रे यस्य तद्द्विनेत्रम्। प्रकृष्टोऽञ्जलिर्यस्य सः प्राञ्जलिः। हरेरिन्द्रस्य।

१९. प्रत्येकं प्रतिपदार्थं विनियुक्तात्मा विभक्तशक्तिः सर्वान्तर्यामीत्यर्थः । आमृष्टं परिभूतम् ।

१०. उदीर्ण उद्धतः । धूमाकारः केतुरुत्पातविशेषः ।

१. उपायाः सामादयः । सन्निपातस्य विकारः सान्निपातिकः, त
प्रतिहतक्रियाः विफलप्रयोगा इति भावः ।

२. निष्कमुरोभूषणम् । तारकशिरश्छेदाय हरिणा चक्रं त्यक्तं,
नष्टशक्ति जातमिति भावः ।

३. मोक्तुं भवं त्यक्तुमिच्छवः मुमुक्षवः। कर्मैव बन्धस्तं छिनत्तीति त
निवृत्तिलक्षणं धर्मम् आत्मज्ञानहेतुभूतमित्यर्थः । शान्तये नाशाय
सेनां रक्षां नयतीति तं सेनान्यं स्कन्दम् । भवस्य संसारस्य, शान्त
इति शेषः ।

१४. गोप्तारं रक्षितारम् । गां पृथ्वीं त्रायन्त इति गोत्रास्तान् भिनत्ती
गोत्रभिदिन्द्रः । जयश्रियं बन्दीमिव हठहृतमहिलामिव ।

१५. गर्जिताद् गर्जितस्य वानन्तरं प्रवृत्तां गर्जितानन्तराम् । जि
जितवती ।

३६. कामो मनोरथः सेनानीरूपः । कश्चित्क्रियानपि । अस्य सेनान्य
सर्गव्यापारं सृष्टिकर्म । आत्मना न यास्यामि न स्रक्ष्यामीत्यर्थः

३७. दितेरपत्यं पुमान् दैत्यः । विषस्य वृक्षः । असाम्प्रतमयुक्तार्थे
व्ययम् । अनेन निपातेनाभिहितत्वाद् वृक्ष इति द्वितीयान्तो न भव
त्यनभिहिते कर्मणि द्वितीयाभिधानात् ।

३८. इदमेव देवैरवध्यत्वमेव । वृतं प्रार्थितम् । अस्मै प्रतिश्रुतं 'प्रत्याङ्भ्
श्रुवः पूर्वस्य कर्ता' इति चतुर्थी । अलं शक्तम् ।

३९. संयुगे साधुं सांयुगीनम् । अंशादृते ऋतेयोगे पञ्चमी ।

४०. तमःपारे व्यवस्थितं तमोगुणातीतम् ।

४१. उमारूपेण पार्वत्याः सौन्दर्येण । संयमस्तिमितं समाधौ निश्चलम् ।

तस्या इयं तदीया शंम्भुसम

आत्मा पुत्रः । शितिः कण्ठः यस्य सः । सेनापतेर्भावः सैनापत्यम् ।
मोक्ष्यते तारकं हनिष्यतीति भावः । वेणीः संश्लिष्टकेशान् ।

. विश्वस्य योनिः कारणम् । मनस्याहितकर्तव्याः अनन्तकरणीयं मनसा
निश्चित्येत्यर्थः ।

तत्र हरचित्ताकर्षणकृत्ये, अथवा दिवि । पाको नाम कश्चिदसुरस्तस्य
शासन इन्द्रः । द्वौ गुणौ यस्य तद्द्विगुणं द्विरावृत्तं रंहो वेगो यस्य
तेन । मनसा अगमत् गमेर्लुङ्, सस्मारेत्यर्थः ।

उपतस्थे सङ्गतवान् 'उपाद्देवपूजा' इत्यादिना सङ्गतिकरणार्थे आत्म-
नेपदम् । पुष्पं धनुर्यस्य सः पुष्पधन्वा ।

. आसनसन्निकृष्टं सन्निकृष्टासनम् । मिथः रहसि । प्राक्रमत 'प्रोपाभ्यां
समर्थाभ्याम्' इत्यात्मनेपदम् । मूर्ध्ना साञ्जलिना शिरसा ।

. ज्ञातो विशेषः सामर्थ्यभेदो येन तादृश ।

. कुसुमायुधोऽपि अतिदुर्बलास्त्रोऽपि । मधुं वसन्तम् । पिनाकः पाणौ
यस्य सः तं पिनाकपाणिम् ।

. कुलौ हस्ते शेते इति कुलिशम् । कुण्ठं प्रतिबद्धप्रसरम् ।

. वृषाङ्के हरे । प्रतिपन्नकल्पमङ्गीकृतप्रायम् 'ईषदसमाप्त'इत्यादिना कल्प-
प्प्रत्ययः । उच्चैरुन्नता द्विषो येषां तेषामुच्चैर्द्विषाम् । यज्ञांशभुजां
देवानाम् । आप्तुमिष्टमीप्सितम् । निबोध 'बुधबोधने' इति धातोर्लोट् ।

. वीर्यप्रभवं तेजस्सम्भूतम् । उशन्ति कामयन्ते । ब्रह्मणां सद्योजाता-
दिमन्त्राणम् अङ्गानां हृदयादिमन्त्राणां भूर्ब्रह्माङ्गभूः, कृतमन्त्रन्यास
इत्यर्थः, अथवा ब्रह्मण अङ्गभूः, ब्रह्मणः शिरसो जातः शिव इति
शान्तिपर्वणि स्थितम् ।

४. तस्मै रोचयितुं 'रुच्यर्थानां प्रीयमाण'इति चतुर्थी । क्षमा शक्ता ।

. तिष्ठतीति स्थाणुः । अधित्यकायाम् 'उपाधिभ्यां त्यकन्' इति त्यक-
न्प्रत्ययः । अन्वास्ते उपास्ते । प्रणिधिर्गूढचरः । तपस्यन्तं तपः
कर्वाणम ।

५६. अर्थान्तरभाव्यः कारणान्तरसाध्यः । तच्च कारणान्तरं पार्वतीसाधन मिति भावः ।

५७. शेषामिव प्रसाददत्तां मालामिव । प्रतस्थे 'समवप्रविभ्यः स्थ' इत्यात्मनेपदम् । आस्फालनं प्रोत्साहनार्थं ताडनम् ।

५८. साशङ्कं सभयम् । हिमवति भवं हैमवतम् ।

६४. अन्यां न भजतीति तमनन्यभाजम् । ईश्वरव्याहृतयः महापुरुषोक्तयः

६५. पतङ्गेन तुल्यं पतङ्गवत् । विविक्षुः प्रवेष्टुमिच्छुः विशतेः सन्नन्तात् प्रत्ययः । अक्ष्णः समीपं समक्षम् ।

६६. तपः अस्यास्तीति तपस्वी । मन्दाकिनीपुष्करबीजमालां जयपद्माक्ष मालिकामिति यावत् । उपनिन्ये समर्पितवती ।

६७. सम्मोह्यतेऽनेनेति सम्मोहनम् ।

६९. भावं रत्याख्यम् । असाचि साचि सम्पद्यमाना कृता साचीकृत तिर्यक्कृतेत्यर्थः ।

७०. द्रष्टुमिच्छुः दिदृक्षुः ।

७३. मरुतां देवानाम् । खे व्योम्नि ।

७५. उच्छिरसः उन्नतशिरसः महतः । शून्या निरुत्साहा ।

७६. मोहो मूर्छा परमयनमाश्रयो यस्याः सा मोहपरायणा मोहैकशरण सती भवन्ती । विवशा विधिपराधीनेत्यर्थः मूढत्वान्निश्चेष्टा व विधवाया भावः वैधव्यम् ।

७७. अयीति प्रश्ने । पुरुषस्याकृतिरिवाकृतिर्यस्य तत्पुरुषाकृति ।

७८. स्थलीं वनभूमिं, तत्रत्यान् प्राणिन इत्यर्थः ।

७९. अभ्युपपत्तुमनुग्रहीतुम् आश्वासयितुमित्यर्थः ।

८०. दुःखमस्याः सञ्जातं दुःखिता सञ्जातदुःखेत्यर्थः, तारकादित्वादितच्

१. अनन्तरमविलम्बितमेव । विधुरां भर्तृविरहदुःखिताम् । ज्वलनातिसर्जनादग्निदानात् ।

२. पतिवर्त्म गच्छन्तीति पतिवर्त्मगाः । प्रतिपन्नं ज्ञातम् ।

३. आकाशभवा सरस्वती अशरीरा वाक् । शफरीं मत्स्यविशेषस्त्रियम्

४. चिराद्दुर्लभो न भविष्यति अचिरमेव सुलभो भविष्यतीत्यर्थः

५. उदीरितेन्द्रियः प्रेरितेन्द्रियः स्मरेणेति शेषः । स्वसुतायां सरस्वत्याम् । एतद् हरलोचनार्चिषि शलभत्वम् ।

६. प्रवणीकृतः अभिमुखीकृतः ।

७. धर्मेण धर्माख्यप्रजापतिना । सरस्वतीं वाचम् । वशिपक्षे अशन्यमृतशब्दौ दुःखा-नन्दकारणत्वात् कोप-प्रसादपरौ, अन्यत्र वैद्युताग्न्युदकपरौ ।

तपात्यये प्रावृषि । ओघेन प्रवाहेण ।

उपप्लवान्तं विपदवधिं शापावसानकालमित्यर्थः । दिवातनस्य दिनभवस्य । प्रदोषं रात्रिम् ।

अक्ष्णोः समीपे समक्षम् । निनिन्द—धिङ् मे रूपं यद् हरमनोहरणाय नालमिति गर्हितवती । सौभाग्यं स्पृहणीयता, प्रियवाल्लभ्यम् । सौन्दर्यस्य तदेव फलं यद् भर्तृसौभाग्यं लभते, नो चाद्विफलं तदित्यर्थः । स्त्रीणां प्रियालोकफलो हि वेषः ।

अवन्ध्यरूपतां सफलसौन्दर्यम् । इयेष इच्छति स्म, तपसा शिवं वशीकर्तुमुद्युक्तेत्यर्थः । तथाविधं शरीरार्धहरम् । तादृशः अनन्यनारीरतिः ।

कदाचिद् अवसरे लब्धे । सा पितरमरण्यनिवासमयाचत—'दुह्याच्'

९३. रूपस्य योग्यः सदृशो वानुरूपः । तदाख्यया गौर्याः संज्ञया प्रथि
गौरीशिखरमिति प्रसिद्धमित्यर्थः । शिखण्डिनो बर्हिणः, भूम्नि मतु
बहुबर्हियुक्तमित्यर्थः ।

९४. त्वग् वल्कलम् । उत्तरासङ्गः उत्तरीयम् । अधीतमस्या अस्ती
तामधीतिनीम्, 'इष्टादिभ्यश्च' इतीनिप्रत्ययः । द्रष्टुमिच्छवः दि
क्षवः । धर्मवृद्धेष्वित्यादि—सति धर्मज्येष्ठे वयोज्यैष्ठ्यं न प्रयोजन
मित्यर्थः ।

९५. पूर्वतपःसमाधिना प्रथममनुष्ठितेन तपोनियमेन । लब्धुं शक्
लभ्यम् ।

९६. अजिनं कृष्णमृगत्वग्, आषाढः प्रयोजनमस्येत्याषाढः व्रतिनां पाल
शदण्डः तयोर्धरः । जटिलः जटावान् ब्रह्मचारीति शेषः ।

९७. अतिथिषु साध्वी आतिथेयी । सपर्यया पूजया ।

९८. नामेत्यपरमार्थे । विनीय अपनीय । ऋजुनैव विलासरहितेन ।

९९. अपीति प्रश्ने । क्रियार्थे इदं क्रियार्थम् । सुखेन लभ्यत इति सुलभम्
समिधश्च कुशाश्च समित्कुशं 'सर्वो द्वन्द्वो विभाषैकवद्भवति' इत्येकव
द्भावः । क्षमाणि योग्यानि । शरीरमाद्यं खलु धर्मसाधनम्—धर्म
कायेन वाचा बुद्ध्या धनादिना च साध्यते, तेषु च वपुरेव मुख्
साधनम् । सति देहे धर्मार्थकाममोक्षाश्चतुर्वर्गाः साध्यन्ते । शीर्य
इति शरीरम् ।

१००. रूपं सौम्याकृतिः । पापवृत्तये पापाचरणाय । यदुच्यते, लोकैरि
शेषः । व्यभिचरितुं शीलमस्येति व्यभिचारि, ततोऽन्यद् अव्यभि
चारि सत्यम् । रूपं शीलानुसारीति सामुद्रिकवचनं सत्यमिति भावः
शीलं सद्वृत्तम् ।

१०१. बहुधमां बहुक्तिसहाम । द्विजातीत्यादि—ब्राह्मणस्वभावोऽयमि

प्रथमस्य वेधसः हिरण्यगर्भस्य । अमृग्यमचिन्त्यम् ।

देवभूमयः स्वर्गपदार्थाः । उपयन्तारं वरम् ।

निवेदितं वरार्थित्वं सूचितम् । प्रार्थयितुमर्हः प्रार्थयितव्यः । ऊष्मणा सहितेन सोष्मणा । निःश्वसितेन दीर्घनिःश्वासेन ।

कियत् कियदवधिकम् । पूर्वाश्रमो ब्रह्मचर्यम् । श्राम्यसि तपस्यसि । तं त्वया मनसा सञ्चिन्त्यमानं वरं भर्तारम् ।

द्वे जन्मनी यस्य विद्येते तेन द्विजन्मना । न शशाक लज्जयेति शेषः । अथो अथ ।

७. वर्णः प्रशस्तः अस्यास्तीति तं वर्णिनं ब्रह्मचारिणम् । यस्मै लाभायेदं यदर्थम् । उष्णवारणं आतपत्रम् इव ।

८. अधिश्रियः अधिकैश्वर्यान् । अवमत्यावधूय । रूपेण हार्यो न भवतीति तमरूपहार्यम् ।

०. सद्भावः परमार्थः । अगूढसद्भावं प्रकाशितसदभिप्रायं यथा तथा । इङ्गितं हृद्गतो भावः । निष्ठा मरणमवधिर्यस्य सः नैष्ठिकः यावज्जीवब्रह्मचारी स चासौ सुन्दरो विलासी इति तथोक्तः नैष्ठिकसुन्दरः । परस्परविरुद्धं नैष्ठिकत्वं सुन्दरत्वं च परमेश्वर एवोपपद्यते ।

१. समर्पयन्ती अक्षमालासमर्पणं जपविरामद्योतकम् । चिरव्यवस्थापितवाग् एतेन वाचो लज्जया उपरोधो व्यज्यते ।

२. उच्चैःपदमुन्नतं पदं, तच्चात्र परमेश्वरवधूपदं विवक्षितं, तस्य लङ्घनं प्राप्तिः तस्मिन्नुत्सुकस्तत्परः । किलेत्यलीके, अतितुच्छत्वादसाधकमेवेत्यर्थः । अगतिरविषयः ।

३. वर्णी ब्रह्मचारी । अमङ्गलाभ्यासे सर्पभूषणत्व-कपालमालाधरत्व-परेतभूमिसञ्चार-चिताभस्मोद्धूलनादिके रतिर्यस्य तं यथोक्तमीश्वरम् ।

४. असदीप्सितादनिष्टमनोरथात् । सा विधा यस्य सस्तद्विधः अमङ्गल-

श्मशानभूमिनिखातस्य वध्यशङ्कोः । यूपो नाम पशुबन्धनसाधनभूत संस्कृतदारुविशेषः, तस्य सत्क्रिया प्रोक्षणाभ्युक्षणादिसंस्कारः ।

११५. प्रतिकूलं वदितुं शीलमस्येति तस्मिन् । उपान्तलोहिते प्रान्तरक्ते तिर्यक् साचि निहिते । अनादरात्तिर्यगीक्षतेत्यर्थः ।

११६. पार्वती एनं ब्रह्मचारिणमुवाच च । न वेत्सि अज्ञानादेवायं शिवद्वेष स्तवेत्यर्थः । यद्वा मूढाः, परमार्थज्ञानहीना इत्यर्थः ।

११७. अशेषं कात्स्न्र्येन । भावोऽभिलाषः तत्रैकरसं पक्षपाति । वचनीयमप वादम् । न हि स्वेच्छासञ्चारिणो लोकापवादाद् बिभ्यतीति भावः ।

११८. हे आलि सखि । वटुः वाचाटो माणवकः । वक्तुमिच्छुर्विवक्षु महतः पूज्यान् । निवार्यतां– आश्रमाद् बहिर्भागे निस्सार्यतां, ना मस्य दर्शनं सहे इति भावः । पापं भजतीति पापभाक्, भवतीति शेष

११९. इतः अन्यत्र । वृषराजकेतनः वृषभध्वजः । स्वरूपं वटुवेषं त्यक्त निजरूपमास्थायाश्रित्य । समाललम्बे जग्राह ।

१२०. सरसाङ्गयष्टिः स्विन्नगात्री । व्यतिकरः समाहननम् । सिन्धुर्नदी ।

१२१. दासते आत्मानं ददातीति दासः । अह्नाय शीघ्रम् । उत्सर फलप्राप्त्या क्लेशं न विसस्मार । नवतामक्लिष्टताम् । सफलः क्ले न क्लेश इति भावः ।

१२२. अथ श्रीपरमेश्वरस्यानुग्रहानन्तरम् । मिथः रहसि । दाता सन् प्र णीक्रियतां, पित्रा दीयमानायाः मम महाननुग्रह इति भावः ।

१२३. शास्तीति शासनः स्मरस्य शासनः ।

१२४. प्रभामण्डलैस्तेजःपुञ्जैः । अरुन्धत्या सह वर्तन्त इति सारुन्धतीका

– [illegible] वेत्याथेवेति शेषः । बहु भूयिष्ठम् ।

७. तद्दर्शनादरुन्धतीदर्शनात् । धर्म्याणां धर्मादनपेतानां 'धर्मपथ्यर्थन्यायादनपेते' इति यत्प्रत्ययः । सत्यः पतिव्रताः पत्न्यः सत्पत्न्यः 'पत्युर्नो यज्ञसंयोगे' इति ङीप् नकारश्च ।

८. अनूचानाः साङ्गवेदप्रवक्तारः ।

९. अञ्जसा तत्त्वतः न विद्मः दृश्यमानस्य रूपस्यातात्त्विकत्वाद् इति भावः । आत्मानं निजस्वरूपम् । धियां पथि न वर्तसे । अतस्त्वयैव त्वद्रूपं कथनीयमिति भावः ।

०. सुमहती गुह्यतमत्वादतिदुर्लभेत्यर्थः । प्रार्थना निजरूपनिरूपणप्रार्थना ।

२. इत्थम्भूतः इमं प्रकारं परार्थप्रवृत्तिरूपं प्राप्तः ।

३. सः परार्थप्रवृत्तिरहम् । विद्युत्वान्मेघः । प्रसूतिं पुत्रोत्पादनम् ।

४. आत्मजन्मने पुत्राय । यजमानो यष्टा 'पूङ्यजोः शानन्' इति शानन्प्रत्ययः । अरणिमग्निमन्थनदारुविशेषम् ।

५. विक्रियायै वैकल्योत्पादनाय ।

६. महाकोशी नाम तत्रत्या काचिन्नदी, तस्याः प्रपाते भृगौ, सा नदी यत्र पतति तस्मिन्प्रदेशे, सङ्गमः, अस्त्विति शेषः ।

७. मनसा समरंहसः मनस्तुल्यवेगाः ।

८. द्वारि तिष्ठन्तीति द्वाःस्थाः द्वारपालकाः ।

९. अर्घमर्हन्तीत्यर्घ्यान् पूज्यान् । अर्घार्थं जलमर्घ्यम् ।

१. वः कर्तव्यं न पश्यामि, निस्पृहत्वादित्यर्थः ।

२. कस्मिंश्चित्कर्मणीति शेषः । प्रभवन्तीति प्रभविष्णवः तेषु प्रभुषु विषये इत्यर्थः ।

३. कुलजीवितं कुलस्य प्राणभूता, परमप्रेमास्पदमित्यर्थः । बाह्यवस्तुषु [illegible] ।

१४४. अग्रं नयतीत्यग्रणीस्तमग्रण्यं प्रगल्भम् । उदाहरणानि कथाप्रसङ्गा एव वस्तून्यर्थास्तेषु । नोदयामासुः प्रतिवक्तुं प्रेरयामासुः ।

१४५. मनसः शिखराणां च समुन्नतिः शिखराणीव मनो महोन्नतमित्यर्थः किन्नाम दुष्करमुन्नतचित्तानामिति भावः ।

१४७. अस्पृष्टपुरुषान्तरं पुरुषान्तरस्यानभिधाय्यकम् । उच्चैः परमम् ।

१४८. साक्षी द्रष्टा । वरानिष्टान् ददातीति वरदः ।

१४९. भारत्या वाचा अर्थमभिधेयमिव । वागर्थयोरुपमानत्वसामर्थ्याच्छिव योर्नित्ययोगो विवक्षितः ।

१५०. विधिः सामग्री । उद्भूतिरुच्छ्रायः । उद्भूतये इति 'नमःस्वस्ती'त्या दिना चतुर्थी ।

१५१. अधोमुखी, लज्जयेति शेषः । गणयामास, लज्जया कमलदलगण नाव्याजेन हर्षं जुगोपेत्यर्थः ।

१५२. सम्पूर्णकामोऽपि, कन्यकां दातुं कृतनिश्चयोऽपीत्यर्थः । मेनामुखमुदै क्षत, उचितोत्तरजिज्ञासयेति भावः । कन्यार्थेषु कन्याप्रयोजनेषु गृहिणीनेत्राः कलत्रप्रवृत्तय इति भावः ।

१५३. मेने अङ्गीचकार । पतिरेव व्रतं यासां ताः पतिव्रताः ।

१५४. न्यायादनपेतं न्याय्यम् । आददे हस्ताभ्यां जग्राह ।

१५५. गृहमेधी गृहस्थः । फलं—इह परत्र च कारकत्वात् पात्रे कन्याप्र गार्हस्थ्यस्य फलम् ।

१५७. पच्यत इति पाकः फलम् । पुरःपाकाभिः पुरस्कृतफलाभिः ।

१५८. आदर आसक्तिः । जाम्बूनदं सुवर्णम् । वतंसः कर्णकुण्डलम् ।

१५९. वैवाहिकीं विवाहयोग्याम् । त्रयाणामह्नां समाहारस्त्र्यहः, 'राजाहः [illegible] । द्विगत्वादेकवचनम् । 'रात्राह्ना

आमन्त्र्य साधु यामेत्यापृच्छ्य । खमाकाशम् । उद्ययुः उत्पेतुः ।

ओषधीनामधिपस्य चन्द्रस्य वृद्धौ, शुक्लपक्षे । जामित्रं लग्नात्सप्तमं स्थानम् ।

उद्गमनीयवस्त्रं धौतवस्त्रयुगम् । पर्जन्यो मेघः । प्रफुल्लतीति प्रफुल्लं काशं काशपुष्पं यस्याः सा ।

आमुच्यमानं निबध्यमानम् । लतेव—लताकुसुमानां नानावर्णत्वा-त्पद्मरागेन्द्रनीलाद्याभरणानि सूचितानि । उद्यद्भिरुदयं गच्छद्भिः । ज्योतिर्भिरुडुभिः, अनेन मौक्तिकान्युक्तानि । लीयमानैर्निपीदद्भि-रित्यर्थः । विहङ्गैश्चक्रवाकैः सरिदिव, अनेन सुवर्णाभरणानि सूचितानि ।

आदर्शबिम्बे दर्पणमण्डले । स्तिमितं निश्चलम् । हरोपयाने हरप्राप्तौ । उरु विशालम् । गोपतिं वृषभं कैलासमिवारुह्य प्रतस्थे । 'समवप्र-विभ्यः स्थः' इत्यात्मनेपदम् ।

गिरिचक्रवर्ती हिमवान् । कटकैः नितम्बैः ।

विष्टरभाग् आसनगतः । मधु क्षौद्रमस्मिन्नस्तीति मधुमत् । गवि भवं गव्यम्, मधुपर्कमित्यर्थः । नगोपनीतं हिमवदानीतं । मन्त्रान्व-र्जयित्वा मन्त्रवर्जं, न मन्त्रवर्जममन्त्रवर्जम् ।

उदकमस्यास्तीत्युदन्वान् समुद्रः ।

आननं चन्द्र इवेत्युपमितसमासः ।

भीमादीश्वराच्छङ्कत इति तस्य तच्छङ्किनः तद्भीतस्येत्यर्थः ।

ता इन्द्रादयः । ऊढभार्यं परिणीतदारम् । देवाः हरं सेवां ययाचिरे, 'दुह्याचूपचू' इत्यादिना द्विकर्मकत्वम् ।

# धातुवृत्तिः.

अस्ति, अस्मि, असि । अस भुवि, अक०, पर०, ल । अस्तु, ल
प्रादुरासन्, लङ् ।

उपयेमे । यम उपरमे, अक०, आत्म०, लि । उपपूर्वकत्वे भा
त्वेन स्वीकाररूपेऽर्थे आत्मनेपदम्, उपयमो विवाहः ।

असूत । षूङ् प्राणिगर्भविमोचने, सक०, आत्म०, लङ् ।

प्रपेदे । पद गतौ, प्रोपसर्गः, सक०, आत्म०, लि ।

पुपोष । पुष पुष्टौ, सक०, पर०, लि ।

जुहाव । ह्वेञ् स्पर्धायाम् शब्दे च, शब्दार्थे सकर्मकः, उभ
लि ।

जगाम । गम्लृ गतौ, सक०, पर०, लि । प्रत्युज्जगाम, प्रति
इति उपसर्गद्वयम् । अगमत, लुङ् । अभ्युपागमत्, अभि उप इत्युपसर्गा
लुङ् ।

रेमे । रमु क्रीडायाम्, अक०, आत्म०, लि ।

समादिदेश । दिश अतिसर्जने, सम् आ इति उपसर्गद्वयम्,
उभय०, लि । सन्दिदेश, समुपसर्गः ।

अर्हन्ति, अर्हसि, अर्हथ । अर्ह पूजायाम्, सक०, पर०, ल ।

शशाक । शक्लृ शक्तौ, अक०, पर०, लि ।

अवलम्बते । लबि (लम्ब्) शब्दे अवस्रंसने च, अवोपसर्गः,
आत्म०, ल । समालम्बे, समाङुपसर्गः, लि ।

ससर्ज । सृज विसर्गे, सक०, पर०, लि । उत्ससर्ज उदुप

... लङ् । अन्वभूत, अ

चचार, चेरुः । चर गतिभक्षणयोः, गतावकर्मकः, पर०, लि।
ाचार , उपोपसर्गः । चरन्ति , ल ।

ययौ , ययुः । या प्रापणे, सक०, पर०, लिट् । उद्ययुः , उदुपसर्गः ।
यौ , प्रति उत् उपसर्गद्वयम् । याति , ल । यास्यामि , लृ। प्रयात ,
र्गः , लो ।

उपतस्थिरे । उपोपसर्गः, तस्मिन् सङ्गतिकरणार्थे ष्ठा गतिनिवृत्ताविति
त्म०, सक०, लि । उपसर्गं विना तस्थौ , पर०, लि । प्रतस्थे, प्रोप-
त्मनेपदम् , लि । अन्वतिष्ठत्, अनूपसर्गः लङ् । तिष्ठतु , लो ।

उवाच, ऊचुः । ब्रूञ् व्यक्तायां वाचि, सक० , उभय० , लि ।
वच परिभाषणे, सक०,पर०, लि। प्रत्युवाच, प्रत्युपसर्गः । उच्यते ,
ल ।

बिभर्ति, बिभ्रति । डुभृञ् धारणपोषणयोः, सक०, उभय०, ल ।

ब्रूत । ब्रूञ् व्यक्तायां वाचि, सक० , उभय० , लो । आत्थ , आह ,
याह , प्रत्युपसर्गः ।

नोदयामास, नोदयामासुः । णुद प्रेरणे, सक०, उभय०, लि ।

ास्यसि । ज्ञा अवबोधने, सक, पर०, लृ ।

च्छति, इच्छामि , इच्छामः । इष इच्छायाम् , सक०, पर०, ल ।
ल ।

ानेष्यति । आ उपसर्गः, णीञ् (नी) प्रापणे, द्विकर्म०, उभय०,
णेष्यति पर्युपसर्गः, उपसर्गबलाद्विकारोऽर्थः । निन्ये, लि । उपानिन्ये,
ः ।

जगाय । जि जये, अक०, पर०, लि ।

म्पत्स्यते । समुपसर्गः, पद गतौ, सक०, आत्म०, लृ ।

यतध्वम् । यती (यत्) प्रयत्ने, अक०, आत्म०, लो ।

मोक्ष्यते । मुच्लृ (मुच्) मोचने , सक० , उभय० , लृ ।

तिरोदधे । डुधाञ् धारणपोषणयोः, सक०, उभ०, लि । तिरस्
यम् । अन्तर्दधे,अन्तर् अव्ययम् । समधत्त समुपसर्गः, लङ् । विधत्ते,
सर्गः , ल ।

प्राक्रमत । प्रोपसर्गः , क्रमु पादविक्षेपे, क्रमो विकल्पेनात्मने
अक०, ल । उपचक्रमे, उपोपसर्गः, लि । प्रचक्रमे, प्रोपसर्गः ।

आज्ञापय । आ उपसर्गः, ज्ञा नियोगे, सक०, उभय०, लो ।

कुर्याम् । डुकृञ् करणे, सक०, उभय०, लिङ् । अकरोत्,लङ् ।
लि । करवाम, लो । क्रियताम् कर्मणि लो । प्रमाणीक्रियताम्, नामधा

बभाषे । भाष व्यक्तायां वाचि , द्विकर्मक० , आत्म, लि । अभा
लङ् । अपभाषते, अपोपसर्गः, ल ।

निबोध । न्युपसर्गः , बुध बोधने , सक० , उभय० , लो ।

उशन्ति । वश कान्तौ, कान्तिरिच्छा, सक०, पर०, ल ।

अन्वास्ते । अनूपसर्गः , आस उपवेशने , अक० , आत्म० , ल

ईक्षते, । ईक्ष दर्शने, सक० , आत्म० , ल । अपेक्षते अपो
ऐक्षत, लङ् । उदैक्षत, उदुपसर्गः । समीक्ष्यते , समुपसर्गः, कर्म
अपेक्ष्यते , अपोपसर्गः ।

पस्पर्श । स्पृश स्पर्शने , सक० , पर० , लि ।

अलक्षयत् । लक्ष दर्शनाङ्कनयोः , सक० , उभय० , लङ् ।

ददर्श ,दृशिर् प्रेक्षणे, सक० , पर० , लिट् । पश्य , लो ।
लङ । पश्यामि, ल । ददृशे , कर्मणि लिट् । अदृश्यत ,
[illegible] लङ् ।

विकीर्यते । व्युपसर्गः, कॄ विक्षेपे, सक०, पर०, कर्मणि ल ।

प्राप्य । आप्लृ (आप) लम्भने, प्रोपसर्ग, सक०, उभय०, लो ।

ीयते । प्रोपसर्गः, ली श्लेषणे, सक०, आत्म०, ल ।

अन्वकम्पयत् । अनूपसर्गः, कम्प कम्पने, सक०, पर०, लङ् ।

शृणु । श्रु श्रवणे, सक०, पर०, लो । शृणोति, ल ।

नियोजयिष्यति । न्युपसर्गः, युज संयमने, सक०, उभय०, लि ।

परिरक्ष । पर्युपसर्ग, रक्ष पालने, सक०, पर०, लो ।

युज्यते । युजि (योगे, सक०, उभय०, कर्मणि ल ।

परिपालयाम्बभूव । पर्युपसर्गः, पाल रक्षणे, सक०, उभय०, लि ।

पपात । निरुपसर्गः, पत् गतौ, अक०, पर०, लि ।

। समुपसर्गः, हृञ् हरणे, सक०, उभय०, लो ।

शाशसे । शासि (शंसु) इच्छायाम्, नित्यमाङ्पूर्वोऽयम्, सक०,
, लि ।

ष्णन्ति । पुष पुष्टौ, सक०, पर०, ल ।

आप्नुहि । आप्लृ(आप) व्याप्तौ, सक०, पर०, लो । अव
र्गः, कर्मणि ल ।

परामर्श । मृश आमर्शने, आङुपसर्गः, सक०, पर०,

व्यापारयामास । व्युपसर्गः, पृ पूरणे, सक०, उ

। णिदि कुत्सायां, सक०, पर०

अयाचत । याचृ याच्ञायाम्, द्वि

अमंस्त । मन ज्ञाने, सक०,

ो ।

प्रत्युद्गिताय। प्रति उत् इति उपसर्गद्वयम्, इण् गतौ, सक०,
पर०, लि। एहि, आ उपसर्गः, लो। एति, ल।

वर्त्तसे। वृतु वर्तने, अक०, आत्म०, ल। प्रवर्त्तसे, प्रोपसर्ग
प्रार्थयसे। प्रोपसर्गः, अर्थ याच्ञायाम्, सक०, आत्म०, ल
अन्विष्यति। अनूपसर्गः, इष गतौ, सक०, पर०, ल।
मृग्यते। मृग अन्वेषणे, सक०, आत्म०, कर्मणि ल।
गाहते। गाहृ विलोडने, सक०, आत्म०, ल।
श्राम्यसि। श्रमु तपसि खेदे च, अक०, पर०, ल।
विद्यते। विद सत्तायाम्, अक०, आत्म०, ल।
लभस्व। लभ् प्राप्तौ, सक०, आत्म०, लो।
अपृच्छत्। प्रच्छ ज्ञीप्सायाम, द्विक०, पर०, लङ्।
निवर्तय। वृतु वर्तने, सक०, पर०, लो।
वेत्सि, विद्मः। विद ज्ञाने, सक०, पर०, ल।
द्विषन्ति। द्विष अप्रीतौ, सक०, उभय०, ल।
निवार्यताम्। न्युपसर्गः, वृञ् आवरणे, सक०, उभय०, लो
चचाल। चल कम्पने, अक०, पर०, लि।
सस्मार। स्मृ चिन्तायाम्, सक०, पर०, लि।
बभासे। भासृ दीप्तौ, अक०, आत्म०, लि।
प्रसीद। सद विशरणगत्यवसादनेषु, गतौ सक०, पर०, ।
कथय। कथ वाक्यप्रबन्धे, सक०, उभय०, लो।
शाधि। शासु अनुशिष्टौ, सक०, पर०, लो।

आत्म०, ल।

उपपद्यते । उपोपसर्गः , पद गतौ , अक० , आत्म० , ल ।

मन्ये । मन ज्ञाने , सक० , आत्म० , ल ।

वृणुते । वृञ् वरणे , सक० , उभय० , ल ।

गणयामास । गण संख्याने , सक० , उभय० , लि ।

आददे । डुदाञ् दाने , आ उपसर्गः , सक० , उभय० , लि ।

नमति । णम प्रह्वत्वे शब्दे च , सक० , पर० , ल ।

एधयामासुः । एध वृद्धौ , सक० , आत्म० , लि ।

आरोपयामास । रुप विमोहने , सक० , पर० , लि ।

रेजे । राजृ दीप्तौ , अक० , उभय० , लि ।

चकासे । कासृ दीप्तौ , अक० , आत्म० , लि ।

जग्राह । ग्रह उपादाने , सक० , उभय० , लि । प्रत्यग्रहीत , प्रत्युपसर्गः , लुङ् ।

# सुभाषितानि.

ऋते कृशानोर्न हि मन्त्रपूतमर्हन्ति तेजांस्यपराणि हव्यम् ।

सरसां सुसपद्मानां प्रातर्दीधितिमानिव ।

अपवादैरिवोत्सर्गाः कृतव्यावृत्तयः परैः ।

वीर्यवन्त्यौषधानीव विकारे सान्निपातिके ।

कर्मबन्धच्छिदं धर्मं भवस्येव मुमुक्षवः ।

विषवृक्षोपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् ।

न हीश्वरव्याहृतयः कदाचित्पुष्णन्ति लोके विपरीतमर्थम् ।

८. प्रमदाः पतिवर्त्मगा इति प्रतिपन्नं हि विचेतनैरपि ।

९. अशनेरमृतस्य चोभयोर्वशिनश्चाम्बुधराश्च योनयः ।

१०. रविपीतजला तपात्यये पुनरोघेन हि युज्यते नदी ।

११. प्रियेषु सौभाग्यफला हि चारुता ।

१२. न धर्मवृद्धेषु वयः समीक्ष्यते ।

१३. भवन्ति साम्येपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः

१४. शरीरमाद्यं खलु धर्मसाधनम् ।

१५. न रत्नमन्विष्यति मृग्यते हि तत् ।

१६. मनोरथानामगतिर्न विद्यते ।

१७. अपेक्ष्यते साधुजनेन वैदिकी श्मशानशूलस्य न यूपसत्क्रिया ।

१८. अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम् ।

१९. न कामवृत्तिर्वचनीयमीक्षते ।

२०. न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्

२१. क्लेशः फलेन हि पुनर्नवतां विधत्ते ।

२२. वृत्तं हि महितं सताम् ।

२३. क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ।

२४. विक्रियायै न कल्पन्ते सम्बन्धाः सदनुष्ठिताः ।

२५. विनियोगप्रसादा हि किङ्कराः प्रभविष्णुषु ।

२६. अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ।

२७. प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ।

२८. भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ।

२९. स्त्रीणां प्रियालोकफलो हि वेषः ।

# कथासारः.

उत्तरस्यां दिशि देवतात्मा हिमालयो नाम पर्वतश्रेष्ठोऽस्ति । स पितृणां मनसो जातां (अयोनिजां)कन्यां मेनां परिणिनाय । तयोर्मैनाकनामा पुत्रः पार्वतीनाम्नी पुत्री चाजायेताम् । कदाचिदागतो नारदः यौवनदशां प्राप्तां पितुः समीपवर्तिनीं पार्वतीं दृष्ट्वा तां श्रीपरमेश्वरस्य भवित्रीं पत्नीमकथयत् । तस्माद् हिमवान् वरार्थमन्यत्र दूतसम्प्रेषणादिकं नाकरोत् । देवेनाप्रार्थितः कन्यकां स्वयं दातुं न शशाक च । शिवश्च तदा हिमाद्रौ तपस्यन्नास्त । हिमवान् तं शुश्रूषितुं सखीसमेतां तनयां प्रेषयामास ।

पार्वतीशुश्रूषाकाले चतुर्मुखाद्वरलाभेनात्युद्धतसत्त्वः वज्रांगपुत्रस्तारकासुर इन्द्रादीन् देवानतीव पीडयामास । तस्य पीडां सोढुमशक्ता देवा ब्रह्माणं प्राप्य वार्तां न्यवेदयन् । तस्य नाशाय सेनान्यं स्रष्टुं प्रार्थयामासुश्च । ब्रह्मा च 'युष्माकमभीष्टसिद्धिर्भविष्यति । कियानपि कालः प्रतीक्ष्यताम् । तारको लोकानपि दग्धुं पर्याप्तेनातिकठिनतपसा देवैरवध्यत्वरूपं वरं मत्तः लब्धवान् । तस्मान्मत्त एव क्षयं नार्हति । तं च नाशयितुं श्रीपरमेश्वरस्यांशं विना कस्यापि नास्ति शक्तिः । तस्माद् यूयं शिवस्योमायां यथानुरागः स्यात्तथा यतध्वम् । अथ पार्वत्यामुत्पन्नः पुत्रः कुमारः सर्वं सम्यक्करिष्यति' इत्युक्त्वा तिरोदधे । देवाश्चानन्तरकरणीयं मनसा निश्चित्य दिवं ययुः । इन्द्रस्तत्कार्यनिर्वहणाय मन्मथ एव शक्त इति तं मनसा सस्मार ।

अथ चेन्द्रं प्राप्तः कामः तन्निदेशानुसारेण शिवस्य पार्वत्यामनुरागमुत्पादयितुं कृतप्रतिज्ञः प्रस्थाय स्थाण्वाश्रमं प्राप्य तत्र तपस्यन्तं शिवं ददर्श । तदा च पार्वती यदा शिवसान्निधावागत्य यथाचारं प्रणनाम तदैव तस्य समुचितमवसरं चिन्तयन् कामः धनुषि बाणं समधत्त । अथेतस्मादधिकरोषस्य शिवस्य फालनेत्रादुद्भूतो वह्निः मन्मथं भस्मावशेषमकरोत् । भूतपतिस्तिरोदधे च । एतत्सर्वं दृष्ट्वा निराशा पार्वती शून्यहृदया भवनाभिमुखी जगाम ।

तेनापमानितेव ...

ब्रह्मा सुतां सरस्वतीं रूपमोहितोऽभिललाष । तादृशविकारकारणं मन्म
स्तेन शप्तः । कामेन प्रार्थितश्च स यदा हरः पार्वतीं परिणेष्यति तदा क
स्वं वपुः प्राप्नुयाद् इति शापनिवृत्तिमकथयत्' इति । अथ रतिः शापाव
प्रतीक्षमाणा तस्थौ ।

भग्नमनोरथा च पार्वती शिवलाभाय तपः कर्तुं निश्चितवती । पि
भ्यनुज्ञाता सा कठिनं तपश्चरितुमारेभे । शिवश्च वर्णी भूत्वा तां प
तत्रागत्य शम्भुं बहुधा दूरयित्वा तमननुरूपं वरमकथयत् । शिवलाभ
दीप्सितान्मनो निवर्तयितुं तां प्रेरयामास च । पार्वती तु स्वनिश्चयादल
न व्यतिचचाल । तस्यास्तादृशीं भक्तिं दृष्ट्वा सन्तुष्टः सः स्वं रूपमा
तस्याः पाणिं जग्राह । सा च लज्जमाना अतिष्ठत् ।

अथ गौरी आत्मानं हिमवता तस्मै दीयमानमियेष । तदनु च प
मेश्वरो मनसा सप्तर्षीन् सस्मार । सारुन्धतीकाश्च ते शिवसन्निधौ प्रादुरा
शिवश्च 'अहं शत्रुपीडितैर्देवैः पुत्रोत्पादनं प्रति याचितोऽस्मि । तदर्थं प
परिग्रहीतुमिच्छामि । मदर्थं युष्माभिर्हिमालयः सुतां याचितव्यः'
तानाह । मुनिसमूहश्च तथेत्युक्त्वा तस्मात्प्रस्थाय ओषधिप्रस्थं हिमव
माससाद । तत्र लब्धोपचारश्च सः 'अस्मन्मुखेन शम्भुः स्वयमेव त
तरं वृणुते । तस्मात् त्वं तं सुतया सङ्घटयितुमर्हसि । तव श्रेयस
सम्बन्धः' इति हिमालयमुवाच । मेनया सहितो हिमवानतीव प्रीतः
गृहीत्वा तथैवेति प्रतिजज्ञे । इष्टकार्यनिर्वाहात् सन्तुष्टं च मुनिमण्डल
मन्तीं त्रिलोचनवधूमाशीर्वचनैः संवर्धयामास । अथ ते मुनयः अ
शिवाय निवेद्य यथोद्देशं जग्मुः ।

अथ हिमवान् सुमुहूर्ते सुताया विवाहदीक्षामकरोत् । वृष
रुह्यागतं शम्भुं दृष्ट्वा हिमवान् सर्वविभवैः प्रत्युज्जगाम । अनन्तरं श
मवतोपनीतं पार्वत्याः करं जग्राह । अथ देवाः परिणीतदारं शम्भुं
शापस्य पार्वतीपरिणयान्तत्वादिदानीं लब्धशरीरस्य कामस्य सेवां
शम्भुं प्रार्थयामासुः । विगतकोपः शम्भुरात्मन्यपि कामस्य सायकानां

## वृत्तसमुद्देशः.

"अस्युत्तरस्यां दिशि देवतात्मा" — इत्यादि । वृत्तमुपजातिः । इन्द्रवज्रो-पेन्द्रवज्रयोर्योग उपजातिः । "स्यादिन्द्रवज्रा यदि तौ जगौ गः", "उपेन्द्रवज्रा प्रथमे लघौ सा", इति लक्षणम् ।

"अवचितबलिपुष्पा वेदिसम्मार्गदक्षा"— इत्यादि । मालिनीवृत्तम् "ननमयययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ।

"शैलात्मजापि पितुरुच्छिरसोऽभिलाषम्" --- इत्यादि । वसन्ततिलकावृत्तम् । "उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ।

"अथ मोहपरायणा सती विवशा कामवधूर्विबोधिता" — इत्यादि । वियोगिनीवृत्तम् । "विषमे ससजा गुरुः समे सभरालोऽथ गुरुर्वियोगिनी" इति लक्षणात् । वियोगिन्याः वैतालीयम् इति सुन्दरी इति च नाम ।

'अथ मदनवधूरुपप्लवान्तं व्यसनकृशा परिपालयाम्बभूव"—इत्यादि । पुष्पिताग्रावृत्तम् । "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा" इति लक्षणात् ।

तथा समक्षं दहता मनोभवम्'-इत्यादि । वंशस्थवृत्तम् । "जतौ तु वंशस्थमुदीरितं जरौ" इति लक्षणात् ।

## गणनियमः.

मस्त्रिगुरुस्त्रिलघुश्च नकारो भादिगुरुः पुनरादिलघुर्यः ।
जो गुरुमध्यगतो रलमध्यः सोऽन्तगुरुः कथितोऽन्तलघुस्तः ॥

थवा,

आदिमध्यावसानेषु यरता यान्ति लाघवम् ।
भजसा गौरवं यान्ति मनौ तु गुरुलाघवम् ॥